<u>काव्यामृतवर्षिणी ( षाण्मासिक संस्कृतपत्रिका ) तृतीयवर्षम् प्रथमोऽङ्कः जनवरीतः जूनपर्यन्तम् २०१९</u>




तृतीयवर्षम् प्रथमोऽङ्कः जनवरीतः जूनपर्यन्तम् २०१९

दिवसकरमरीचिप्रौढतापप्रदग्ध सुभगदयितकल्पं छन्नदेहप्रकाशम् ।
निभृतनिभृतमेवासेवितुं भव्यवामा धरणितलमुपेता गुर्जरेषु त्रियामा।।1।।
दिशमथ दिननाथे वारुणी लम्बमाने श्रयति शमितजल्पे पक्षिवृन्दे कुलायम्।
प्रसृमरसुमगन्धैरागमं सूचयन्ती मदयति मधुपालीं गुर्जरेजु त्रियामा ॥2॥
मुदितकुमुदबन्धुप्रीतसौभाग्यबिन्दु- प्रथितविशदभालाऽमुद्रिताऽरक्ततारा ।
व्रजयुवतिदुकूलस्तो महत्कृष्णवर्णा समवतरति मुग्धा गुर्जरषु त्रियामा ॥3॥
जलधिलहरिलोल्लज्झर्झरीतालबन्धै- र्मदकलविहगालीकण्ठनिर्यन्निनादैः ।
पवनधुततरुत्थोद्दामझम्पाङ्घ्रिचारी नटति पटुनटीयं गुर्जरेषु त्रियामा ॥4॥
दरविकसितमल्लीमञ्जुनेत्रा प्रशान्त- भ्रमरनिचयचञ्चत्कज्जलालेखरम्या ।
असितजलदमालासौम्यशाटी सलज्जा सरति नववधूटी गुर्जरेषु त्रियामा ||5||
असितजलधिवक्षस्तल्पके पर्यटन्ती निविडतिमिरलेखा शम्भलीबिन्दुवक्त्रा ।
धरणितलमुपैति ध्वान्तलीलानिगूढं पिशुनविटसहाया गुर्जरेषु त्रियामा ||6||
समवतरणवेलां वासुदेवस्य कान्चि- च्छयदविशदपक्षां भाद्रपद्याऽष्टमीकाम्।
स्वतनुविभवसाम्यां स्मारयन्ती सगर्वा लुठति तुलितकृष्णा गुर्जरेषु त्रियामा।।7।
त्रिदशपतिनमस्यामानयन्ती सहेलं त्रिनयनचरणाब्जद्वन्द्वके सेविकेव।
पणवमुरजघण्टाशङ्खभृत्सोमनाथा- नदति ललितकण्ठा गुर्जरेषु त्रियामा॥8॥
जलधिकुहरसुप्तैः शुक्तिशङ्खप्रवालै- स्तुहिनविशदवर्णैर्दस्युभीतैः प्रकामम्।
असितपटनिभैः स्वैः प्रार्थिता ध्वान्तयूथै- रवितुमतति सत्त्वं गुर्जरेषु त्रियामा ||9||
विकचकुमुदनेत्रा यूथिकामञ्जुहासा सरसिजमृदुकाण्डाऽताम्रहस्ताङ्घ्रियुग्मा ।
तरुशिखरकुलायोन्निद्र पक्षिप्रजल्पा समभिसरति चन्द्रं गुर्जरेषु त्रियामा।।10।
वसति गृहगवाक्षे स्थापितैर्दीपपुञ्जे- नगरसघनवीथ्यां विद्युताञ्च प्रकाशैः ।
सपदि नयनलीलां कुर्वती सानुरागं ननु सरति सहेलं गुर्जरेषु त्रियामा॥11॥
सततमभिभवन्ती सच्चरित्रप्रकाशं नयविनयसमज्ञाबोधविज्ञानलोकम् ।
पिशुनसमुदयोद्यद्द्वेषनाटीव चित्रा- भिनयति बहुरूपं गुर्जरेषु त्रियामा||12
हलिहलदलनार्ता श्यामतोयाऽसिताङ्गी प्रतपनतनुजेव स्फीतकातर्यभावा ।
विततलहरिवेगप्लाव्यामानाखिलोर्वी श्रयति खकुकटाहं गुर्जरेषु त्रियामा।।13

क्वचिदयमभिराजीसूनुरित्थं स्वयात्रा- ध्वनि सपदि समन्ताद्रोदसीं व्याप्नुवन्तीम्।
नयनयुगलदृष्टां लाटनीवृत्त्रियामां विशदयति बुधानां हृन्मुदे रम्यबन्धैः ।।14
मुम्बईममरेलीतो गच्छन्निशि निशीथिनीम्। मिश्रोऽभिराजराजेन्द्रो यथादृष्टं समञ्चति
।।15

लोकतन्त्रम्

- प्रो. मिथिलाप्रसादत्रिपाठी

दिशि दिशि दलकेत्वांदोलितानीक्षितानि अभिमतदलघोषध्वानसंदूषितानि ।
निजगुणपरदोषाख्यानसंमूर्च्छितानि मतकलनविवाद भ्रांतदेशांतराणि ।।।
विजयमभिलषंतश्चामृतां संस्कृतिं स्वां स्वजननधरणिं सन्मातरं क्रोशयंतः ।
विवदननिपुणत्वं वामतो दर्शयंतः अहह! भरतपुत्रा मोमुहत्यालपंत : । । 2
विलपति विजिगीषा क्वापि निर्वाचनस्था विकसति विचिकित्सा वैभवान्धा मदार्ता।
विरमति न च सत्तामोहलिप्सालंती जयति भरतभूमौ धार्तराष्ट्री दुराशा ।।3
अहमहमिकया येऽन्यान्विगर्हातुराः स्युः प्रतिदिनमिह मिथ्याजल्पनायैव सिद्धाः ।
विवदनरतिशीलाः शीलहीनाः समंतात् विलसति विजिगीषा तेषु धन्याश्च नम्याः । । 4
वितरति च मतार्थं कम्बलानां प्रसादं तदनु मदिरमद्यं द्रव्यदानं कुटीरे ।
गतधनजनताभ्यो दीपमालाप्यमायाम् विलसति मतहेतौ लोकतंत्रः स्वतंत्रः ।। 5

साम्प्रतमसाम्प्रतम्डॉ

. महेशझा

विधिसमयविरुद्धध्वान्तवात्याविशेषे बहुविनतशिरोभिः सर्वदा वर्त्तनीयम्।
तमिति सदुपदेशं तेऽम्ब संस्मृत्य मुग्धः सततमहममोघं संलभे सुप्रभातम्।।1
सुरुचिसुरसपर्या सद्गुणाधाननीति: सति पथि गतिरेताश् शासनं तेऽस्मदर्थम् ।
अयि जननि कथञ्चित् पालितं यन्मया तद्व्य तरदनुपलं मे जीवने सुप्रभातम् ॥2
व्रततिवलयबद्धश्वेतकुष्माण्डतुल्या बहुरुजपरिभूता सच्चरित्रा तनुस्ते ।
अतिविमलयशोर्भि लक्षिता दूरदेशात्स्मृ तिपथमधुनापि प्रातरायाति मातः । 3
निशि जननि सदैव ज्वालयित्वा च दीपं लघुमपि सुशिखं प्राबोधयो नोऽर्धरात्रो ।
प्रपठत निजपाठ रात्रिशेषे सुगम्यं तदिति तव विभातेऽद्यापि शिक्षां स्मरामि ॥4
बहुविषयगभीरं मैथिलीग्राम्यगीत नवनववनिताभिश् शिक्षितुन्ते समीपम् ।
अहरहरलमम्बागम्यते स्मादरेण प्रियमिति सुविभातेऽद्यापि वृत्तं स्मरामि ॥ 5
सुमसमकमनीया कापि धन्या नवोढा कुचभरनमिताङ्गी कामवामेव हृद्या ।

जननि रुचिररूपं स्वं तिरस्कृत्य नम्रा ह्यलभत सुविभातप्रोज्ज्वलं शासनं ते ।। **6**

नयविनयगुणानां न्यास आशाऽऽतुराणां शरणमशरणानां दुर्दशां साधुदृष्टिः ।

जननि कुपथपान्थानानयोऽध्वानमार्यं निशि तिमिरऽतान्धान् सुप्रभातप्रभेव **॥7**

समुचितमतिधन्या या समाजे वरेण्या बहुविषमविवादे सा ह्यभूत् सर्वमान्या ।

न खलु निजकुटुम्बं श्रद्धया तामनेके सुकृतिमिव विभाते मातरं मे स्मरन्ति ॥ **8**

हरिहरचरणाब्जे भक्तिरक्ति: प्रपत्तिः खलकुटिलकुसङ्गे कुत्सिते वा विरक्तिः।

परिणतिरिति मेऽम्बासादिता शिक्षया ते सितशुभसुविभातख्यातिरर्काभयेव ॥**9**

प्रियललितकथाभिं बोधयन्ती सुवृत्तिं गुरुषु पितरि साधुष्वादरं शिक्षयन्ती ।

निजनयनवचोभिं व्याहरत् प्रायशोऽलं सुचरितमिति मातुः संस्मरामि प्रभाते ।।**10**

सततमतिथिदेवो मत्पिताऽऽसीन्महात्मा तदभिमतविधात्री जन्मदात्री मदीया **|**

परिहृतनिजभोज्याप्यातिथेयी प्रसन्ना चरितमिति तदीयं सुप्रभातावदातम् ।।**11**

जयति जगति वन्द्या

डॉ. कमला पाण्डेया

सरलरुचिरभावैर्वत्सजातं  लिहन्ती मधुरसितपयः तं पाययन्ती सुखेन ।

सरसशुचिममत्वं संवहन्ती मनोज्ञा, जयति जगति वन्द्या कामदा कामधेनुः।।**1**।।

प्रतिपदमनुगत्य प्रीणयन् सेवया याम्, अवितुमभिललाष प्राणदानैर्मृगेन्द्रात्,

नरपतिरुपलेभे पुत्ररत्नं दिलीपः, जयतु कविभिरीड्या नन्दिनी होमधेनुः।।**2**।।

प्रभवति चितिमूला भूतले वान्तरिक्षे, निखिल **-** विभव-वाञ्छां पूरयन्ती प्रकाशैः ।

अपघटयति कामं ध्वान्तमन्धं परस्तात्, जयति जगति वन्द्या गौरियं दीप्तशृङ्गा ॥ **13** ॥

मुरलिमधुरतानं भूयशः पीयमानः, चरति विपिनदेशे वा गवां कोऽपि वृन्दः, ।

मुरलिधरसमक्षं वर्तुलत्वं विधाय, परमसुखनिधानं प्राप्य तुष्टोऽथ पुष्टः॥**4**॥

अभिनवनिजसूतिं वीक्षमाणा प्रहृष्टा मृदुलतमशरीरं तस्य सद्यो लिहन्ती।

जनयति किल वत्सौ सा यमौ वा कदाचिद्, जयति विविध वर्णा गौरियं लोकमाता ।।**5**।।

वासुदेवद्विवेदी

**-** प्रो. धर्मदत्तचतुर्वेदी

नरि नरि विदितो यो शुद्धवृत्तो महात्मा सरसललितरूपं संस्कृतं भाषमाणः ।

निखिलजनसभायां स्पष्टभाषी य आसीद्ज यतु गुरुवरेण्यो वासुदेवद्विवेदी ।।**1**

निजलघुलघुवालैः सार्धमेष भ्रमन् यो विहितकठिनयात्रो दक्षिणे चोत्तरेऽपि।
निजगुणगुरुताभिर्लब्धकीर्तिर्जने भ्यो जयतु गुरुवरेण्यो वासुदेवद्विवेदी । 12
निजकृतकविताभिर्हास्यचाटूक्तिभिश्च लघुशिशुनवयुवकान् मोदयन् नव्यरागैः।
नवविविधलयेषु प्रान्तदेशीयकेषु मधुररसमयं यः प्राणिणोद् बालकाव्यम् ॥3
न हि कथमपि दर्पो दृश्यते यत्र किञ्चि- दधिगतबहुमानो राष्ट्र पत्यादिभिर्यः ।
निजजनसहयोगैः सार्वभौमाख्यसंस्था हरहरशिवकाश्यां स्थापिता तेन वाण्याः ।।4
अतिसरसरसाला दीपमाला यदीया कविजनबुधवर्यान् प्रीणयन्ती प्रियेयम् ।
सुरगिरि रममाणान् संस्कृतज्ञान् सहर्ष- मभिनवरसतृप्त्याऽमोदयत्पद्यकाव्यम्।। 5
मम गुरुवरपत्नी पुत्रमेकं प्रसूय इह दिवमनुयाता वासुदेवं विहाय ।
तदनु गुरुवरो यः संस्कृतं सेवमाना द्विनवतितमवर्षे जीवनं त्यक्तवान् स: ।।6
नगरजनपदानां विश्वविद्यालयेषु नवनवविषयाणां ग्रन्थजातं प्रदर्श्य ।
स्वमतिगुणगरिम्णा संस्कृतं वर्धयन् यो विदितकविवराणां काव्यगोष्ठीमकार्षीत्॥7
प्रमुदितवदनोऽयं नम्रतामूर्त्तिरासीत्वि धृतसुभगवेशः स्वल्पभोज्यान्नसेवी ।
गुणिजनबहुसेवी शान्तचित्तो विवेकी निखिलजनसहायश्छात्रवर्गो पकारी । 18
बुधजनसदने यो जायमानोत्सवे शुभपरिणयकृत्ये वाद्यगीतं विधत्ते ।
विविधलयनिबद्धं पद्यजातं नवीन सरसललितगीतं श्रावितं तेन बालैः।। 9
गुरुवरनिजशिष्याः स्पर्धमानास्तु वादे प्रथमविजयमुच्चैः प्राप्नुवन् संस्कृते ये ।
अतिगुणिगणमध्ये कीर्तितास्ते समन्ता- न्निजगुरुपरिमार्गैः संस्कृतं वर्धयन्ति ।। 10

## मनोव्यथा

डॉ. कामेश्वर चौधरी

कथितसमसमाजो जातिभेदे निमग्नस् त्यजति निजगुणत्वं मानवीयञ्च मूल्यम् ।
सहजमिलनदेशे भिन्नताञ्चावलोक्य मनसि भवति पीडा वैरभावः किमर्थम् ? 1
दिशि दिशि निशि वारे वेदनायुक्तचेतो रहसि मनसि चिन्ताचित्रमेतत्प्रदर्श्य ।
स्वमतिरपि सदेयं शान्तिभावं हिनस्ति सदयहृदयतत्त्वं भेदभावेन छिन्नम्॥2
हरति गुणगणं स्वं सर्वदा शुद्धभावं जनयति जनपीडां द्वेषबुद्धिं प्रदाय ।
सरलसुखसमत्वं प्रेम हन्ति प्रभेदः कथयति कविचित्तं धिग्धिगस्तु प्रबुद्धान् ॥3॥
भरतसुकृतदेशे भाति नायं विचारो झटिति मलिनशब्दैर्न्यूनतानां निवेश: ।
भवति सकलभूमौ चिन्तनं चिन्तकानां विहितसफलमूल्यं नश्यते यद्वरेण्यम् ॥4॥
अविकलकलिकोपःकुण्ठतां तां तनोति दहति सहजसौख्यं मित्रभावं महान्तम् ।

प्रसरति परदुःखं यत्र नित्यं नवीनं रघुकुलमणिरामः शान्तिसूत्रं तनोतु ॥ 5 ॥

निर्वाचनम्प्रो

. शिवरामशर्मा

सहृदयहृदयेभ्योऽभ्यस्तविद्याधनेभ्यः मुनिगणमतबोधे श्रद्धया पूरितेभ्यः ।
कविरसरसिकेभ्यः काव्यगोष्ठीस्थितेभ्यः सकुलकुलपतिभ्यः सन्तु भूयो नमांसि ॥ ॥
उरगनकुलसख्यं वायसोलूकमैत्री कपिमकरसखित्वञ्चोचिताचारहीनम् ।
प्रतिदिनमनुबन्धैर्वृद्धिमेतीति मन्ये समय उपगतोऽसौ मित्र! निर्वाचनस्य **||2 11**
सकलकृषककष्टोत्पाटनज्ञानिमान्याः सपदि दलितदैन्योद्धारमार्गं दिशन्तः।
पुरि पुरि परनिन्दापण्डिताः सञ्चरन्ति समय उपगतः किं मित्र! निर्वाचनस्य ॥3॥
पुनरपि घनशोको मेचकः काकलोक: स्वगलपरुषभावे कोमलत्वं प्रमातुम् ।
विचरति सहकारे कोटरोद्धारलग्नः समय उपगतः किं मित्र! निर्वाचनस्य ॥4॥
जलचरपिशिताशी नित्यमम्भोनिवासी सरति मकरराशिः प्राशितुं मांसमन्यत् ।
खरतरखगरावैर्वारिता यन्निवृत्तः समय उपगतस्तन्मित्र ! निर्वाचनस्य ॥ 5॥
अलमलमिति वैरं शाश्वतं छादयन्तः पिहितमुखरवक्त्राः सारमेयाः शृगालाः ।
मृगयतुमुपशल्ये मेषशावांश्चरन्ति समय उपगतः किं मित्र! निर्वाचनस्य ॥6॥
नवतृणशकलानि न्यस्य दन्तान्तराले विदितकुटिललीलोप्युल्लसद्धीः शृगालः ।
विचरति मृगसङ्घे लङ्घनक्षीणकायः समय उपगतः किं मित्र ! निर्वाचनस्य ॥ 7 ॥
जपति किमपि कर्णे वर्णहीनं विनेतुः लपति बहुकुतर्कान् पत्रकारैः प्रणुन्नः ।
उपहरति च शाटीश्चेटिकाश्चाटुकारः समय उपगतः किं मित्र! निर्वाचनस्य ॥ 8॥
यदनुभवविहीनामङ्ग भङ्गिप्रवीणां दलपतिकुलबालां नायिकीकृत्य भृत्याः ।
समरविजयवाञ्छाच्छादिता उच्छलन्ति समय उपगतस्तन्मित्र! निर्वाचनस्य ॥9॥
कटुकटुतरवाचान्योऽन्यमुच्चैः क्षिपन्तः पटुपटुतरबुद्धयाशुद्धतां बोधयन्तः ।
दिशि दिशि विचरन्तो भान्ति केचिन्महान्तः समय उपगतः किं मित्र! निर्वाचनस्य
||10||
निर्वाचने विजयकामिविचित्रनेतृ- चारित्र्यसूक्ष्मपरिशीलनलब्धरूपम्।
पद्याष्टकं परिहसत्परिषत्सदस्यैः यद्भावितं तदिदमेव फलं नवीनम् ||11|

भावभूतीश्वरीयम्डॉ

. कृपारामत्रिपाठी 'अभिरामः '

जनयति परमेशो मायया विश्वमेतद्- धृदयकमलवासी पालयत्यप्यतन्द्रः ।

प्रथयति निजवृत्या सन्ततिप्रेमबन्धं कठिनमृदुकराग्रै ललनैस्ताडनैश्च ।।]
स्वयमपि स कदाचिद्बालभावं प्रपन्नो रचयति शिशुलीलां बाललीलां क्रमेण ।
जनयति जननीनां वक्षसि स्तन्यधारा- मनतिमधुरमिष्टाञ्जीवनञ्जीवनस्य ।।2
अविदगुणदोषा भारंती बालकस्य स्फुरति सरसजिहवाकण्ठलग्ना स्वभावात् ।
अधरमधुरिमाणं मेलयन्तीव मामा भवति सपदि पापेत्यादिरम्या क्रमेण ॥13
नवरसरुचिरेयं भावभूतीश्वरीय कविमतिकलितेयं देवताभारतीयम् ।
सहृदयहृदयान्त: स्रोतसोल्लासिनीयं जयति जगति नानारूपरम्या प्रणम्या | 4
गुणगणगरिमाणं धारयन्तो धरायां गिरिवरपदभाजः केऽपि गोवर्धना ये।
जनहितमविरामं साधयन्तः सुसन्तः पदकमलरजोभिः पावयन्तो जयन्ति ॥5

हरिहरपुरशारदास्तुतिः

- डॉ. शंकरराजारमणः

हरिहरपुरवासा चन्द्रिकाचारुहासा निगमनुतविलासा निस्तुला देहभासा ।
कृतजडिमनिरासा व्यक्तविद्याविकासा जयति जनितदासानुग्रहा शारदा सा ।।1।।
करपरिचितकीरा जुष्टतुङ्गाप्रतीरा कुचरचितपटीरा सागराम्भोगभीरा ।
मकुटघटितहीरा पातु नो धीरधीरा शशिविशदशरीरा शारदा शुभ्रचीरा ॥2॥
श्रुतिषु धृतरिरंसा चन्द्रलेखावतंसा भवबलरिपुकंसारातिबद्धप्रशंसा ।
शुकशिशुलसदंसा पादसंसद्रहंसा दिशतु जितनृशंसा शारदा मङ्गलं सा ॥3॥
अवधिरमलतायाश्चारुतारासहाया- भरणभृदनपाया भञ्जिताशेषमाया।
जगदनवधि पायाद्वारिजावासजाया सकलकविनिकायाराधिता देवता या ।।4।।
भवतु मम समक्षा बोधयन्ती विवक्षा मखिलभुवनरक्षानर्म निर्माणदक्षा ।
परिचितसितपक्षा कापि देवी बलक्षा- कृतिरुपनतयक्षामर्त्यसिद्धर्षिलक्षा॥ 5॥
त्वममृतरसधाराकम्बु गङ्गाम्बु तारा- सहचरघनसाराभ्यस्तकान्तिप्रसारा।
सरसिजभवदारा भावुकानामुदारा विघटितभवभारा शोभसे निर्विकारा।।6।।
मसृणचरणपाता मौनिवृन्दानुयाता कृषि पृथुरवदाता भासि मध्ये च शाता।
जयतु भुवनमाता सृष्टशब्दार्थजाता यदधरमधुपाता स्तौति यामेव धाता ।। 7 ।।
निटिलधृतललामा साधिताशेषकामा हरिहरपुरधामाधिष्ठिता कापि वामा।
अवतु कमलदामालङ्कृता सा त्रियामा- सखशकलधरा मामल्पहासाभिरामा।।8।।
विलसति कदने या देवसार्थानुनेया विहरति निगमे या धीमतामप्रमेया।
स्फुरति कलियुगे या शङ्कराचार्यगेया प्रवणमतिरजे या पातु सा मामजेया ॥ 9॥

दशकमिति पठन्तः शारदामूर्तिमन्तः- करणमधि वहन्तः सन्ततं हन्त सन्तः ।
विदधति मतिमन्तः काव्यमानन्दयन्तः सकलजगदनन्त श्रेय उल्लासयन्तः ।।10।

## यात्रादशकम्

-डॉ. श्रेयांशद्विवेदी

विविधविधपरा में शैक्षिकीधर्मयात्रा, भवतु भुवनमध्ये शास्त्रसंरक्षणार्थम् ।
अभिनवपरिपूताः सन्तु शिष्याः समस्ताः, सकलगुणविशिष्टाः सत्यनिष्ठाः सुशीलाः।।1

प्रथमदिवसमध्ये पुष्करे ब्रह्मतीर्थे, कृतमतिविपुलं तद्दर्शनं तर्पणञ्च ।
निहितमपि यदासीत् तीर्थभूतं मनस्सु, तदनुसरसि दृष्ट्वा श्रद्धया मे प्रणामः ॥ 2

उदयपुरमहत्त्वं प्राक्तनैः प्रत्यपादि, मनसि तदपि भावो द्रष्टुमासीद्विचारः ।
कुलपतिबहुयोग्यो जेपिशर्मा द्वितीये, दिवसनियतमध्ये योऽह्यभूद्योजकोसौ ॥ 3

दिवसमपि तृतीयो गान्धिनो राजधान्याम्, विदितनिखिललोके स्वामिनारायणोऽसौ ।
सकलजनहितार्थं लोककल्याणकर्तुम्, परमपुरुषलोके विष्णुरूपं दधार ।।4

सुकविलिखितमेकं पद्यमादाय गोष्ठी, तदनु बहु विचित्रायोजिता संस्कृतज्ञैः ।
अहमपि मनसा वै दर्शनार्थं प्रयातः, बहुतरसफलेयं कोहली भाषणेन ॥5

बहुतरमनुजास्ते स्वास्थ्यलाभाय लोके, अभिनवनितवैद्यान्वेषणे तत्पराश्च।
इति मनसि विचिन्त्यैवागतोऽहं चतुर्थे, सुखबहुल दिनेऽस्मिन् जामदेशे सुरम्ये॥ 6

परमपुरुषदिव्यो वासुदेवो नितान्तम्, बहुविधमपि दुष्टाद् द्वारकां प्राप्य दिव्याम् ।
मनसि निखिलतापं दूरकर्तुं समेत्य, नगरमपि सुरम्यं सौख्यपूर्णं चकार ।।7

सुसरलमधुरेयं भातिदिव्यास्मदीया, सकलविभवपूता मानवीया सुभाषा।
अभिनवपरिपूर्णा पाठ्यते सोमनाथे, सरससरलरूपा विश्वविद्यालयेऽस्ति ।।8

शिवसहजतमो वै द्वादशैर्ज्योतिलिङ्गः, प्रकटितनिजरूपैर्नागनागेश्वरोऽसौ ।
दिनमपि तु पवित्रं पञ्चमं दर्शनेन, सफलमपि ममायं वृत्तयात्राप्रसङ्गः ।।9

सहजतमदिनेऽस्मिन् षष्ठयात्राप्रसङ्गे, कविषु परमरम्यः सोमनाथः प्रणम्यः ।
जननमरणशून्यो ज्ञानदाता वदान्यः, जगति महति सेवां श्रीविधाता प्रदत्यात्।।10

यात्रावृत्तं ममेदं हि मालिनीवृत्तनिर्मितम् । इतिहासोपमं भूयात्, छात्राणां सौख्यवर्धकम् ।।11

## परिवेषसुरक्षा

पण्डित श्रीब्रजकिशोर त्रिपाठी

नवजलधरपङ्क्ती राजते व्योमदेहे द्रुमनगनवरूपं भासते तत्र किं वा ।
मृदुजलपरिपातान्मोदते को न लोके तपनकिरणतापः स्रंसते तेन शीघ्रम् ॥1
मनुजहृदयबाधा नो गता किन्तु वृष्ट्या विगलति परिवेषः प्रत्यहं येन विश्वे ।
जगति हि जनसंख्या वर्द्धते शीघ्रगत्या हसति हितदवृन्दं तस्य रक्षां प्रकुर्युः 112
सरसवसुमतीय सर्वतत्त्व विधत्ते कुटिलमनुजसंघो हन्ति तस्याः सुरूपम् ।
विषमयजलवायुत्विक्षितिव्यो मभूतं हरति सकलजीवान् दूषितं शक्तिहीनात् ॥3
फलकिशलयपूर्णा भाति नो वृक्षराजि- विमलसलिलधारा भ्राजते नापि नद्याम् ।
मलयपवनशोभा भक्षिता किं कुतापै रविरतमिह चण्डो वर्द्धते सूर्यरश्मिः ॥ 4
अयि धनजनकामा! हीनभावं विहाय निजगृहपरिवेषं रक्षत स्वार्थवृद्धयै ।
जगति जनपदेषु भ्राजतां पूततत्त्व' हसतु पुनरपीयं मेदिनी यातु दुःखम् ॥5

आतङ्कविध्वंसनम्

**- एस. सुरेन्द्रः**

अरिकुमतिनरौघैः संहता भारतीया विमलमतिभटास्ते स्फोटनैः घातदक्षैः।
अकरुणहननैस्तद्बन्धुमित्रादिसर्वे पितृपतिसहजाद्याभावदुःखप्रतप्ताः।।1
सचिववरनरेन्द्रो तीव्रमालोच्य सेना- पतिवरनिवहैस्तान्हन्तुमातङ्कदुष्टान् ।
समुचितकरणीयं कर्तुमेवादिशत्सः समुचितसमये तान्सैनिकान् विक्रमांश्च ॥2
अरिवधचतुरास्ते सैनिका भारतीया अथ तु निभृतमेव व्योममार्गेण गत्वा ।
भृशमहनतिशक्तैः स्फोटक क्षेपणैश्च मिलितकुमतिहिंसाव्यापृतान् पाकिदेशे।।3
अतिकुपितभटास्ते शत्रुपक्षस्थदुष्टाः भरतभरणपुण्यक्षेत्रमाक्रन्तुमाप्ताः ।
अतिचतुरभटौघं भारतस्यापि शत्रू- नतिजवकरमुक्तेनानुधावत्तदैव ॥4
अतिपटुभटनेता वर्धमानाख्ययोद्धा निजपदकरमुक्तेनैव शस्त्रेण शत्रोः ।
अतिजवयुतवाहं व्योमवाहं निपात्य स्वयमपि पतितोभूच्छत्रुपक्षस्य देशे ॥15
अरिभटगणमध्ये धीरतां नाभ्यमुञ्चद् ध्रुवमरिभटसंघैः बन्धितोऽपि स योद्धा ।
इति बलयुतसेना चाक्रमिष्यत्यतीव- भयभरचकितात्मा शत्रुराज्यस्य मन्त्री ॥6
स च तु विविधराष्ट्रप्रेरितात्माभ्यमुञ्चत् ध्रुवमथ रणवीरं भारतीयं भटं तम् ।
अतिमुदितजनौघैः श्लाघितो भारतीयै- रतुलभटवरोऽयं भारतं प्राप्तवांश्च ॥7

मुक्तकम्डॉ

. निरञ्जनमिश्रः

जयति गृहजनानामार्यभावं भजन्ती  शिशुमनसि नवीनप्रीतिमास्थापयन्ती।

निजनयनविलासाच्चेतसो स्वामिनीव प्रियहृदयविलासं नर्तयत्यत्र काचित् ।।1

जयति शयनतल्पे रक्तवस्त्रावृतांगी- मुखकमलदिदृक्षोर्व्यग्रता चित्तभूमेः ।
वदनवसनखण्डोद्घाटने स्थैर्यमूर्ति- नववदनविकम्पाद्भीतिमापद्यमाना । 2

सततमधुरवाचा रक्षतः कामिनीं यो भ्रमति जनसमूहे तस्य गेहात्कदाचित् ।
रवरहितपदाभ्यां संसरन्तीं कुमारी- मपलकनयनाभ्यां वीक्ष्य कश्चित् रुरोद ॥13

खरतरकरवालैर्खण्डयन् पद्मनाल वदति मधुपमेकं पश्य मद्दीप्तवीर्यम्।
मधुपकुलकुमारीं तावदेवावलोक्य स्खलितभटवरं तं वीक्ष्य भृंगो जहास ॥4॥

नवतरुणविलासं वीक्ष्य वृद्धस्य चित्तं ज्वलति गलितवीर्यं शुष्कपत्रप्रमाणम्।
यदि पतति न हस्ते मोदकं दैवयोगाद् भवति वदनतापायैव तत् सत्यमेतत् ।।5।।

मालिनी -डॉ.

राजेन्द्रत्रिपाठी 'रसराजः '

सुरभितसुमशोभां प्रेक्षमाणा विमुग्धा सजलकलशयुग्मं विभ्रती सा सुरम्या ।
नलिननयनबाणै मनवान् घातयन्ती मदयति मदमत्ता मानसं मालिनीयम् ॥

दहति दिनकरः खे बाधते ग्रीष्मतापः, अशिशिरदिनवायौ वर्धते लोकपीडा।
प्रखररविमयूखैर्मानवाः तापतप्ताः सघनतरुतमाले यान्ति छायां ग्रहीतुम् ||2

विपदि विरहबाधां वर्धयन्मेघमाला, शमयति नहि तापं मोदते नैव काया ।
विलपति कलकान्ता गर्जनं भूरि मत्वा । नुदति रुदति बाला हा प्रिये हा प्रिये हा ॥13

कविकुलगरिमाणं संस्कृते वर्धयन् यो, ललितपदपरागं काव्यपुष्पेषु भोक्तुम् ।
मनसि वचसि काये पार्वती पार्वतीशं, नमति लिखति काव्यं कालिदासः कवीन्दुः ।। 4

प्रवहति भुवि वायू रोचते मेघमाला रसयति तरुमालो मोदते चाम्रजाल : ।
ध्वनयति घनघोरः द्योतते विद्युदाभा प्रचरति ऋतुवर्षा शोभते श्यामलाभ्रः ।।5

परहितपरिलग्नः प्राप्य काव्यामृतं यो वितरति बहुमानं माननीयः कवीन्द्रः ।
प्रियकविररविन्दो वर्षिणीपत्रिकायाम्, कवयति नवपद्यं मालिनीमाधुरीभिः ।।6

किन्न रम्यं वसन्ते.....!

- डॉ. प्रियव्रतमिश्रः

धरणिरुचिरयोषा पीतवासाः सुवासा विविधविहगहासः कोकिलानां सुभाषा।
मधुकरनिकरास्ते पुष्परेणुं भजन्ते मधुमयमधुमासे किन्न रम्यं वसन्ते ।।1।।

हरितकपिशवर्णा सा धरा भाति रम्या विगतसुषमशाखाः पल्लवं धारयन्ति ।
नवनवविटपास्ते व्योमकायं विशन्ति मधुमयमधुमासे किन्न रम्यं वसन्ते ॥ 2 ॥

वहति मलयवातो निर्मलो दिग्दिगन्ते विशति हृदयदेशं मन्दगानां विलासः ।
हरति विमलचित्तं सौख्यसारं वितन्वन् । मधुमयमधुमासे किन्न रम्यं वसन्ते ॥3॥
शुकचटककपोता: सङ्गिरन्ते वनान्ते कुररखगविशेषा व्यूहबद्धा रमन्ते ।
वितरति मधुरागं कोकिलः पञ्चमान्ते मधुमयमधुमासे किन्न रम्यं वसन्ते ॥4॥
यवचणकपलाशैः सर्षपैः धान्यजातै: विलसति पृथिवीयं कल्पवृक्षस्समाना।
स्मितवदनजनास्ते रामकृष्णं भजन्ते मधुमयमधुमासे किन्न रम्यं वसन्ते ।।5।।

पर्यावरणसंरक्षणम् - डॉ. जोगेन्द्रकुमारः

वहनमिह नदीनां निर्मलानां हि नित्यम् चलनमिह च वायो: शाश्वतं सर्वथैव।
स्फुटनमनिशमत्र प्रायशो वै तरूणाम् प्रकृतिरिति सखे भोः कथ्यते साधुभिश्च ।।1।।
सलिल - मलिनता वै दूषणत्वं च वायोः सततमिह तरूणां कर्तनं छेदनञ्च ।
जनमनसि सदा वै चैव दुर्भावना स्याद् विकृतिरिति सखे भोः कथ्यते साधुभिश्च ॥2॥
वपतु निजधरायां पादपान्वै प्रकामम्शु भमनसि सदा भोः मित्र! सद्भावना स्याद् ।
गुणगणसहितो वा संस्कृतिश्चेयमेव ह्यवगुणरहितो वै ना च यज्ञप्रियः स्यात् ॥ 3 ॥
जगतिविमलवातो भेषजं जीवनस्य मधुरनवजलं वै जीवनस्याश्रयञ्च ।
ननु निखिलधरा च स्यात् सुनीरैः सुवातैः सुहरितनववृक्षैः सर्वदा वै सुपूर्णा ॥ 4॥
सुखमय मिह लोके जीवनं वाञ्छसि त्वम् सलिलममलिनं वा शुद्धवातञ्च नूनम् ।
यदि निजधरणिं वै सर्वदा सर्वत्रैव अवकररहिता भोः! दूषणं मा कुरुष्व ॥ 5॥
तेनवनवपवनाय त्रातुमत्रैव रोगात् सुखदसरसलोके सर्वदा जीवनाय ।
सुफलसुकुसुमेभ्यः प्रायश: वृष्टयै वै विविधसुविटपा: भोः मित्र! आवश्यकाश्च ॥6॥

ग्रामभूमिः

डॉ. हेमचन्द्रबेलवाल:

प्रभुचरणसपर्यातत्पराणां जनानां सुखदवसतिरेषा शुद्धवायु प्रदास्ते ।
भवति विपुलसौख्यं दर्शनेनाथ यस्याः प्रतिजनहृदयस्या ह्लादिका ग्रामभूमिः।। 1
अशुचिनगरदृश्यैर्लब्धदुःखा परिवहनजनादैर्नष्टकर्णा जना ये जना ये ।
किमथ पिहितनासा नालिकादर्शनाद्ये भवति सुखकरीयं तत्कृते ग्रामभूमिः || 2
विहगदलसुगीतैर्गुञ्जिता गीतगीता मलयपवनपूता सागरस्येव मुक्ता ।
दिनकरकिरणैर्या शोभिता सुन्दराभा विलसतु भुवि सेयं शाश्वती ग्रामभूमिः ॥ 3
हिमगिरिगुरुतुंगस्योन्नतिं वीक्ष्य लोका निजजनिमिह सर्वे सार्थकां कुवर्ते ते।

नयनसुखददृश्यैरद्भुतैः तुष्टचित्तै: प्रतिदिनमियमच्छा पूज्यते ग्रामभूमिः ॥ 4

विगलितविभवानां पोषिका वर्धिकेयं गिरिविपिननदीनां रक्षिका पालिका च।

कृषकतनययत्नैः सेविता, वन्दनीया जयतु जगति नित्यं सौख्यदा ग्रामभूमिः ॥ 5

मेघधाड्र्यम्डॉ .

अरविन्दकुमारतिवारी

तपति महति सूर्ये व्याकुले सर्वलोके सरसि सलिलराशिर्दृश्यते हन्त नैव।

विलपति जलजकूलं वीक्ष्य मेघः प्रगल्भः द्रवति न जलबिन्दुं खे चरन् खेचरोऽयम्।।1

निखिलविहगनीडं शून्यतोयं घनेशम् अहह विकलनेत्रं पश्यतीवाद्य खिन्नम्।

तदपि पिहितकर्णो निस्त्रपः पीतमद्यो द्रवति न जलबिन्दुं खे चरन् खेचरोऽयम् ॥ 2

कुचकलशयुगं तत् सुन्दरीणां प्रपीनं कलपटतटलीनं स्वेदतोयाभिषिक्तम् ।

विततवियति संस्थो लोकमानः स्वतन्त्रो द्रवति न जलबिन्दुं खे चरन् खेचरोऽयम् ॥3

चतुरमनुज एष प्रायशो ग्रामकूपान् अभरदयमहो यो मृत्तिकाभिर्विमूढः ।

प्रचुररवितापैस्तो ययन्त्रेऽपि शुष्के द्रवति न जलबिन्दुं खे चरन् खेचरोऽयम्॥ 4

प्रवहति भुवि वायुर्नैव हा रुष्टचेताः कवयति कविवन्द्यो न कविः कश्चिदेव।

विकलितसुरवाणीं ग्रीष्मकाले विजानन् द्रवति न जलबिन्दुं खे चरन् खेचरोऽयम् ॥ 5

त्वमिह मसृणतल्पे हन्त शेषेऽदयालो !

डॉ. संजयकुमारचौबे

जगति तव सुराज्यं विश्रुतं क्वास्ति राजन् त्यजति गदनिबद्धं बालवृन्दं निजासून् ।

कुपितयमकरालस्ताण्डवं सन्तनोति त्वमिह मसृणतल्पे हन्त शेषेऽदयालो ।।1।।

कलुषरहितबालाः स्वास्थ्यसेवाविहीना यमकठिनमुखाग्रे प्रत्यहं यान्ति रम्याः ।

तव च निकृततन्त्रं मूकतामेति सर्वं त्वमिह मसृणतल्पे हन्त शेषेऽदयालो ॥2॥

निजनिलयसुरत्नं चूर्णितं वीक्ष्य तातः लुठति भुवि लतावत् पुत्रशोकेन नित्यम् ।

रुदति जनसुचेतो दैन्यराज्ये त्वदीये त्वमिह मसृणतल्पे हन्त शेषेऽदयालो ॥3॥

नृप ननु सुखदायि क्वाद्य संसाधनं ते क्व च रुचिरदिनानां भव्यदिव्योपहारः ।

तुदति निखिलदृश्यं दुर्दशाया मनो नः त्वमिह मसृणतल्पे हन्त शेषेऽदयालो ॥4॥

व्यथयति न कथं त्वां क्रन्दनं निर्धनानां पृथुकनिधनवृत्ते त्वं कथं लज्जितो नो।

कथमिव विफलतन्त्रे प्राणिषि प्राणहर्त: ! त्वमिह मसृणतल्पे हन्त शेषेऽदयालो ॥5॥

सकलदलविरोधे सन्ति हे राष्ट्रनेतः! कथमपि न च तेषामादरं प्राप्स्यसि त्वम् ।

जनमतमपि नैवं साम्प्रतं ते प्रवृद्धं परमपि तव कार्यं पूर्णतां याति मंत्रिन् ॥ 6॥

काव्यपुष्पं नवीनम् - डॉ. सचिनकुमारत्रिपाठी

कविकुलजनवन्द्या भारती भारतीया हरतु सकलदोषं काव्यधारा त्वदीया ।
वसतु हृदि समेषां कोविदानां कवित्वं प्रवहतु मम वाणी देशदेशान्तरेषु ।। 1 ।।
वदतु वदतु शुद्धं संस्कृतं भारतीय पठतु पठतु शब्द स्पष्टमुच्चारणार्थं ।
लिखतु लिखतु पत्रं सर्वकाराय शीघ्रं भवतु भवतु नूनं संस्कृतस्य प्रचारः।।2।।
इयमिह सुमनो मे नर्तयन्तीव सद्य: सुमधुरपदबन्धैर्मोहयन्ती रसज्ञम् ।
न हि वदति समक्षं पूर्णमर्थञ्च तत्त्वं कविकुलकविता नश्चोरयन्तीव काचित्॥3॥
नवरसगुणदोषान् नैव जानामि सर्वं परमपि मृदुपद्यं लेखितुं प्रस्तुतोऽहम् ।
यदि भवतु कृपा नः कोविदानां सहर्षं प्रसरतु मम काव्यं तीव्रवेगेन शुद्धम् ॥4॥
रसमयकमनीयं पद्यमास्वाद्य सर्वे विदधतु पदमेते सौरभं सारयन्तः ।
कुशलमभिलषन्तस्ते सुधां पाययन्तः परमरसनिमग्नाः काव्यलोकं जयन्तः ॥5॥
मधुरमृदुलभावो रामचन्द्रो दयालुः नरपतिजगदीशो वर्ततेऽयं कृपालुः ।
जयति जगति नाथ: जानकीशः प्रभुर्नः निवसति हृदि यो वै मानवानां प्रजेशः ।।6।।
भुवि परमपवित्रं मन्दिरं निर्मितं किम्? निखिलजनसमूहे घोरचिन्ताऽस्ति नूनम् ।
यदि भवतु दलानामेकवारं मतैक्यं झटिति वसतु रामो मन्दिरे तद्विशाले ॥7॥
वहति धवलधारासौ नदीनां सुरम्या सुरमुनिजनवन्द्या सर्वदेयं पवित्रा ।
हरति सकलकष्टं दुःखदारिद्र्यदोषं विलसतु हृदि रम्या देवगङ्गा नृवन्द्या ॥18॥
अमरसदनमुग्धा देवगंगास्मदीया धवलसलिलधारां पाययत्येव नित्यम् ।
लवणकटुकषाय श्रीसमुद्रस्य शीघ्रं मलिनसलिलपानं हीयते कैर्न लोके ॥ 9 ॥
भवतु भवतु लोके देववाण्याः प्रचार: विलसतु नवमेतत् काव्यपुष्पं प्रकामं ।
यदि भवतु जनेच्छा राष्ट्रसंघस्य नूनं अभिनवसुरभाषा राजभाषा पदे स्यात् ॥10॥

क्रिकेटे -श्री प्रेमशंकरशर्मा

चलति परमलीला सर्वथा हीश्वरस्य, जगति स जगदीशः सक्रियः सर्वथैव।
कथमिह च सुदूरे सन्तु खेलान्मनुष्याः, भुवि वयमिव पुत्तल्यः प्रभोर्हस्तमध्ये ।।1।।
सुविदित इहलोकेऽयं क्रिकेटस्य खेलो, विदधति बहुदेशाश्च क्रिकेटस्य संघान् ।
प्रचलति रुचिरा स्पर्द्धा ब्रिटेने विशिष्टा, अतिबलदशदेशाः स्पर्द्धमाना हि यस्याम्
॥2॥

विलसति दलनेताऽयं विराटस्तु योद्धा, गतवदिह दलं नः नायकत्वे हि तस्य ।
रिपुदलमुपनेत्र ध्वस्यते रोहितेन, विकिटमपि महेन्द्रो रक्षतीदं स धोनी ।।3।।
क्षिपति स बुमराख्योऽयं जसप्रीत एव, सह कुशलतया तं कंदुकं शत्रुपादे ।
हरति हि भुवनेशश्चाहलः शत्रुगर्वं, शमयति च शमी क्षिप्त्वा रिपौ कन्दुकास्त्रं ॥ 13 ॥1
परमपटुदलं प्राप्नोति मानं जयं नः, हरति जनमनांसि क्रीडया भारतीयम्।
परमिह तु नियूजीलैण्डवीरैस्तु युद्धे, स्वदलमपि परास्तं तेन देशोऽस्ति दुःखे ॥4॥
सततमिह महाक्रीडा चलत्येव नित्यं, विजयमपि लभन्ते क्रीडकाश्चाजयं ते ।
विकसतु मनुजानां खेलभावः सदैव, भवति ननु मनः क्रीडया तत्प्रसन्नं ॥5॥

परिजनसुखमाल्यम्

**- प्रो. धर्मदत्त: चतुर्वेदी**

गदति किमपि तुच्छं कोऽपि वाक्यं दुरात्मा छलयति बलशाली दूरतश्चात्र हेयः ।
प्रथयति निजमित्रं क्षुद्रकं कृत्रिमो यो निखिलकपटजालं भेदनीयन्तदीयम् ।।1।।
दधति मनसि किञ्चित्कुर्वते चान्यथा ये कथमपि कुजनास्ते नैव मान्याः समाजे ।
लसिततिलक भाला रक्तपीताम्बरा ये कलुषितविमनस्का वञ्चयन्तः समाजम् ।।2।।
चलति गृहमसारं किं गृहेणापि तेन पतितकुलजना ये दूषयन्तः स्वधर्मम् ।
प्रथितगुणधनाढ्याश्शास्त्रनीतौ पटिष्ठा मनुनयसुगरिष्ठा भारतं स्फारयन्तु ॥3॥
लघुलघुभवनेषु क्षीणकायेषु केचित् सह परिजनवर्गैर्जीवनं यापयन्ति ।
क इह भवतु मानी दीनसेवी दयावान् भवनधनसुदाता निम्नवर्गोपकारी ॥4॥
पठितलिखितशास्त्रनीतिमन्तो भवन्तु निजलघुलघुलिप्साभ्यः सुदूरे भवन्तः ।
शुभगुणविभुताभिर्मार्गनिर्देशकाः स्युः परिजनसुखमाल्यैर्मालिनीं भूषयन्तु ।।5।।

रक्ष जलम् **-डॉ.**

शशिकान्ततिवारी

जनमहदुपकारि व्याधिकष्टापसारि प्रियतनुबलभारि त्वग्जसञ्चारकारि ।
प्रकृतिजसुखधारि स्वेदहं तर्षहारि बहुविधशिवकारि प्राणदं रक्ष वारि ।।1
निशिचरमुनिविज्ञैरज्ञसर्वज्ञसेव्यं प्रियममृतवरेण्यं प्राणिनां सच्छरण्यम् ।
धरणिजबहुमूल्यं वस्तु चैतन्यतुल्यं जलमिदमनिवार्यं रक्षणञ्चास्य कार्यम् **| 2 ||**
स्थलबिलगगने वै सञ्चर त्वं सदैव नवनवशकटैर्वै सञ्चल त्वं मुदैव ।
प्रियवर! बहुमूल्यं जीवनन्ते तदैव जलमिह भुवनेऽस्मिन्नक्षितं स्याद्यदैव ॥13॥
बुधवर तव शिक्षा व्यर्थतां यातु नो चेत् कुरु कुरु जलरक्षा पालयेस्सन्तदीक्षाम् ।

शृणु शृणु मम वाञ्छामाशु पुण्यात्मिकां त्वं वप वप तरुवृक्षान्पादपान् भारतेऽस्मिन्

॥**4**॥

बहुविकटसमस्या वर्धतेऽस्या धरायां नहि ददति हि केचिद्ध्यानमेवात्र चिन्त्यम् ।

यदि भुवि जलबिन्दुर्नैव भूयात्तदा किं तव मम बहुमूल्यं जीवनं स्थास्यतीह **?** ।।**5**।।